# INTRODUCTION

The following pages embody the text of a Nyāya work, called Nyāyakalikā, attributed to Jayanta, the author of Nyāyamañjarī, which undoubtedly forms its author's noblest production, is indeed one of the most brilliant treatises in the history of Nyāya Philosophy and was published in the early nineties of the last century The appearance of the present work, however, was a long felt desideratum, which, it may be hoped, is now fulfilled

From a comparison of the texts of the two works it would seem that the "Kalikā" is meant to be an abstract summary of Nyāya views on the sixteen categories and as such gives a bare outline of the author's own interpretation, appearing at greater length in the "Mañjarī", on Gotama's sutras dealing with these categories *

Jayanta was a Naiyāyika of great learning and wide reputation Even in the days of Gangeśa Upādhyāya he used to be reverently referred to as the "hoary Naiyāyika" (जरन्नैयायिक) and held as a high authority in the S'āstra He was a Gauda Brāhmaṇa of the Bhāradvāja Gotra, being the fifth descendant of S'akti, who had originally migrated from Gauda desa and settled in Kashmir His father's name appears as Chandra His great grand father, S'akti Svāmin, was, according

* The author himself says that the "Kalikā" is intended for beginners ( बालव्युत्पत्तये )

to the report of his son Abhinanda, a minister of king Muktāpīda (Lalitāditya) of the Karkota family

Jayanta was a staunch S'aiva But he says in the Nyāyamañjarī that his grand father, Kalyāna Svāmin, was a great sacrificer and obtained in consequence the village of Gauramūlaka From Jayanta's extremely reverential and devout attitude towards Vedic culture, as evident in his controversial lectures in the "Mañjarī", it seems morally certain that he belonged to a family of Brahmins in which Vedic ritualism was not only held in high esteem but actually practised with all its minute particulars The fact becomes all the more interesting when it is remembered that his ancestors hailed from Bengal which was the stronghold of Mahāyanic Buddhist Culture in those days If S'aktisvāmin was really a contemporary of Lalitāditya, as he is reported to have been, there is no escape from the conclusion that the migration of Jayanta's ancestors took place before Lalitāditya's eastern conquests, that is, anterior to the time of king Yasovarmā of Kanouj The general belief that Brahmanism had lost its hold on Bengal, under the dominant influence of Buddhism, would reecive a rude shock from the above Jayanta would in that case certainly represent the line of Bengali Brahmins prior to the alleged emigration of Brahmins from Kanouj during the reign of "Ādisūra"

It is worth noting, in passing, that though Jayanta was a S'aiva–and this was probably due to the influence of Kashmir—his theistic utterances show that he was

not a follower of the Trika system, either of the Pratyabhijñā or of the Spanda School He had a natural horror for Monism which finds its embodiment in the general S'aiva literature of Kashmir His position in this respect is exactly parallel to that of Bhā Sarvajña, also a S'aiva, a Naiyāyika and an inhabitant of Kashmir

Jayanta's date is not known with certainty But there are reasons to believe that he lived in the 9th century A D & was probably a younger contemporary of Vāchaspati Miśra *

GANGANATHA JHA

* For further details see G N Kaviraj, History and Bibliography of Nyāya Vaisesika Literature (The Princess of Wales Sarasvati Bhavan Studies, Vol III, pp 103-108)

श्री

# न्यायकलिका

## जयन्तरचिता

नमः शाश्वतिकानन्दज्ञानैश्वर्यमयात्मने ।
सङ्कल्पसकलब्रह्मस्तम्भारम्भाय शम्भवे ॥

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्क-
निर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनि-
ग्रहस्थानानान्तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥

तत्र प्रमीयतेऽनेनेति प्रमाणम् । प्रमीयत इति प्रमा प्रमितिः प्रतीतिः उपलब्धिः ज्ञानं जन्यते इत्यर्थः । तेन ज्ञानस्य प्रमाणं जनक कारकमुक्तम्भवति । करणव्युत्पत्तेश्च कर्तृकर्मविलक्षणमेतद्वेदितव्यम् । ज्ञानमपि ज्ञानान्तरजन्मनि यद् व्याप्रियते तदपि प्रमाणमेव । ततोऽन्यत्तु फलम् । यथार्थविषयमसन्दिग्धमव्यभिचारि च तज्ज्ञानम्प्रमाणफलम्, न स्मरणसंशयाविपर्ययात्मकमिति । तच्चतुर्विधम्प्रमाणम्—प्रत्यक्षानुमानोपमानशब्दा इति ।

तत्रेन्द्रियाविषयेऽर्थे यदिन्द्रियैककरणमसंशयस्मरणमविपर्ययश्च ज्ञानं तत्प्रत्यक्षम् । तस्य जनकं कारण इन्द्रियादि प्रमा-

णम् । तज्जन्यं ज्ञानं फलम् । तदपि ज्ञानमिन्द्रियविषयेऽर्थे हा-नोपादानोपेक्षाज्ञानानि जनयत् प्रत्यक्षप्रमाणतामश्नुते । स्मृति-ज्ञानमनर्थजत्वादप्रमाणम् । अगृहीतग्राहित्वन्नैव प्रमाणतायाः प्रयोजकम् । संशयज्ञानन्तु इन्द्रियार्थसन्निकर्षोत्पन्नमपि न प्रमा-णम् अर्थस्यानिश्चयात् । विपर्यये तु अतद्रूपस्तद्रूपतया प्रति-भातीति कथन्तत् प्रमाणम् । इन्द्रियैककारणत्वाच्च प्रत्यक्ष-ज्ञानस्याप्तोपदेशेन्द्रियाभ्यां सम्भूय यद्रूपञ्जन्यते ज्ञान-पनसश-ब्दवाच्योऽयमिति-तदप्रत्यक्षम् । शाब्दं हि तत् । यत्तु स्मर णोत्तरकालं शब्दयोजनया गौरित्यादिकं सविकल्पकं ज्ञानम्भ-वति तन्निर्विकल्पकवदिन्द्रियानुविधायित्वात्प्रत्यक्षम् । चक्षुरा-दिवदन्तःकरणस्यापि मनस इन्द्रियत्वात् सुखादिविषयज्ञान-मपि प्रत्यक्षविषयम् ॥

पञ्चलक्षणकाल्लिङ्गाल्लिङ्गिनि ज्ञानमुपमानम् । पक्षधर्मत्व सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिः अबाधितविषयत्वम् असत्प्रतिपक्ष-त्वं चेति । सिसाधयिषितधर्मविशिष्टधर्मी पक्षः, तद्धर्मत्वम्पक्ष-धर्मत्वम् । साध्यधर्मयोगेन निर्ज्ञातं धर्म्यन्तरं सपक्षः, तत्रा-स्तित्व सपक्षे सत्त्वम् । साध्यधर्मसस्पर्शशून्यो धर्मी विपक्षः, ततो व्यावृत्तिर्विपक्षाद्व्यावृत्तिः । अनुमेयस्यार्थस्य प्रत्यक्षेण वा ऽऽगमेनानपहरणमबाधितविषयत्वम् । संशयबीजभूतेनानुमानेन रहितत्वमसत्प्रतिपक्षत्वम् । एतैः पञ्चभिर्लक्षणैरुपपन्नं लिङ्ग-म् । एतेषु पञ्चसु लक्षणेषु विनाभावः समाप्यते । अविना-भावो व्याप्तिर्नियमः प्रतिबन्धः साध्याविनाभावित्वमित्यर्थः । स च प्रतिबन्धः पूर्वगृहीतः सन् स्मर्यमाणो लिङ्गिप्रतीतेः का-रणम् । तस्य ग्रहणं प्रत्यक्षानुपलम्भसहायान्मानसात्प्रत्यक्षात् ।

धूममग्निसहचरितमिन्द्रियेणोपलभ्याग्निमेश्च जलादेर्व्यावर्तमानम-नुपलम्भेन ज्ञात्वा मनसा निश्चिनोति धूमोऽग्निं न व्यभिचरतीति। तथा निश्चित्य पुनः पर्वतादौ धूमम्पश्यन्नग्निमनुमिनोति। ततश्चैतत्प्रत्यक्षमनुमानम्। परिशेषानुमानन्तु प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणार्थानां परिकल्पनम्। यथा प्रसक्तयोर्द्रव्यकर्मणोः प्रतिषेधात् सामान्यादावप्रसङ्गाच्च पारिशेष्याद् गुणः शब्द इति निश्चीयते॥ सामान्यतोदृष्टन्तु नित्यपरोक्षे धर्मिणि व्याप्तिग्रहणादनुमानम्। यथेच्छादिना कार्येणात्मानुमानं वक्ष्यते। त्रिकालविषयश्चानुमानं शब्दवदिष्यते। धूमेन वर्तमानाऽग्निरनुमीयते मेघोन्नत्या भविष्यन्ती वृष्टिर्नदीपूरेण सैव भूतेति॥

यथा गौस्तथा गवय इत्याटविकप्रयुक्तातिदेशवाक्यसंस्कृतमतेरटवीं पर्यटतो गोपिण्डसारूप्यावच्छिन्नगवयपिण्डज्ञानं संज्ञासंज्ञिसम्बन्धपरिच्छेदफलमुपमानम्। गोपिण्डसारूप्यविशिष्टगवयपिण्डस्य सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतीतेः प्रत्यक्षागमाभ्यामन्यतरस्मादप्यसिद्धेः॥

आप्तोपदेशः शब्दः। प्रतिपाद्यमानमर्थं यथास्वरूपं यः पश्यति यथादर्शनञ्चोपदिशति स आप्तः। तद्वचनमविसंवादि भवति। विप्रलम्भकस्तु नद्यास्तीरे फलानि सन्तीति वितथमपि ब्रूयात्। ऋष्यार्यम्लेच्छसाधारणञ्चैतदाप्तलक्षणम् आप्तवाक्येनैव सर्वत्र व्यवहारात्। पुरुषगुणदोषकृते हि शब्दस्य यथार्थत्वायथार्थत्वे। अर्थप्रकाशकत्वमात्रन्तु शब्दस्य समयोपकृतस्य स्वरूपम्। अत एवाप्तोक्तत्वादस्य प्रामाण्यं न स्वतः। नैसर्गिके हि यथार्थत्वे कथमनाप्तप्रयुक्तानि नद्यादिवाक्यानि

विप्लवेरन् । दृष्टश्च मन्त्रवचसां विषभूताशनिप्रतिषेधार्थानामायुर्वेदवाक्यानां च हरीतकीम्भक्षयेदारोग्यकाम इत्यादीनां प्रामाण्यादेव प्रामाण्यम् । प्रमाणान्तरसंवादात्तन्निश्चीयताम्नाम । प्रयोजकन्तु तस्याप्तप्रणीतत्वमेव तदुक्तिषु संवाददर्शनात् । प्रत्यक्षादीनामप्यर्थक्रियाज्ञानादिसंवादादेव प्रामाण्यन्निश्चीयते । न तु दृष्टे विषये प्रामाण्यनिश्चयपूर्विका प्रवृत्तिः । अर्थसंशयेनैव व्यवहारात् । अदृष्टे तु विषये शब्दैकगम्ये तत्प्रामाण्यनिश्चयं विना महायाससाध्येषु कर्मसु प्रवर्तनमयुक्तमिति शब्दप्रामाण्यमवश्यन्निर्णेतव्यम् । तच्चाप्तप्रामाण्यादेव निश्चीयते । वेदस्य कर्ता पृथिव्यादिकार्यानुमितसत्ताकः परमेश्वरः सर्वज्ञः । अनित्यत्वाच्च शब्दस्य सम्बन्धस्य वैदिकीनाञ्च रचनानाम् । तत्र स्वातन्त्र्यमीश्वरस्येति तत्प्रणीतत्वेन वेदाः प्रमाणमिति । वेदवदागमान्तराण्यपि तन्मूलत्वादाप्तप्रणीतत्वाद्वा प्रमाणमिति वेदितव्यानि ॥

अर्थापत्त्यादिप्रमाणान्तराणां यथासम्भवमेष्वेवान्तर्भावः । चत्वार्येव प्रमाणानि ॥

प्रमाणविषयोऽर्थः प्रमेयम् । आनन्त्येऽपि प्रमेयस्य द्रव्यादेर्द्वादशविधमिहात्मादि प्रमेयन्निर्दिश्यते यन्मिथ्याज्ञानविषयीकृतं संसाराय सम्यग्ज्ञानविषयीकृतन्त्वपवर्गाय कल्पते, तच्चात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदेन द्वादशविधम् । तद्द्वादशविधत्वेऽपि हेयोपादेयतया तावद् द्विविधम्भावनीयम् । तत्र शरीरादि दुःखपर्यन्तं हेयमेव, अपवर्ग उपादेय एव, आत्मा तु कथञ्चिद्धेयः कथञ्चिदुपादेयः । सुखदुःखादिभोक्तृतया हेयः, तदुन्मुक्ततयोपादेयः योगिनामा-

त्मेति पर्यायः । तत्र आत्मा प्रत्यक्षो नावधार्यते, अस्मदादीना-महम्प्रत्ययस्य शरीरावलम्बनात् । अनुमानात्तु प्रतिपत्तव्यः । इच्छाद्वेषप्रयत्नसुखदुःखज्ञानानां कार्यत्वात् कार्यस्य च निराश्र-यस्यानुपपत्तेः । तत्रेच्छादेः कार्यस्य शरीरमाश्रयः बालाद्यव-स्थाभेदेन भिन्नत्वादिच्छादेश्चैकमनुसन्धातारमन्तरेणानुपपत्तेः । यज्जातीयस्यार्थस्य सन्निकर्षादयं सुखमनुभूतवान् पुनस्तज्जाती-यमर्थम्पश्यन् सुखसाधनतामनुस्मृत्य तमुपादातुमिच्छति । त-त्र शरीराश्रयत्वे सत्यन्यस्य सुखसाधनानुभवोऽन्यस्य तत्स्मरण-मन्यस्य तदादित्सेति स्यात् । न चैतद् युक्तं देहान्तरेष्वदर्शनात । नापीन्द्रियाणां तदाश्रयत्वम् । दर्शनस्पर्शनाभ्यामेकार्थानुसन्धा-नात् । यमहमद्राक्षन्तं स्पृशामि यमस्प्राक्षन्तम्पश्यामीति नानेक-कर्तृकोऽयमनुसन्धानप्रत्ययो भवितुमर्हति नाप्यनेकविषयः । इन्द्रियान्तरेण चानुभूयमाने दाडिमादाविन्द्रियान्तरस्य दन्तो-दकानिस्सरणविकारो य उपलभ्यते सोऽन्यदृष्टेऽन्यस्य देहान्त-रवदनुपपन्नः । मनसस्तदाश्रयत्वे सति संज्ञामात्रं भिद्यत एव । ज्ञातुरान्तरं करणम्मनः । तदन्तरेण स्मृत्यादिकार्यस्यानुपपत्तेः चाक्षुपादीनां ज्ञानाना युगपदनुपपत्तेः । तस्माच्छरीरेन्द्रियमनोऽतिरिक्तः कश्चिदिच्छादेराश्रयो वक्तव्यः । स चात्मेति । स चोत्प-त्तिविनाशकारणानुपलम्भान्नित्यः । शरीरसंयोगवियोगावेवास्य जन्ममरणे उपचर्येते । बालस्य दृष्टकारणाभावेऽपि हर्षशोका-दिदर्शनाद् देहान्तरसम्बन्धानुमानात् परलोकः । न च कर्मवै-चित्र्यमन्तरेण जगद्वैचित्र्यमवकल्पते इति पुराकृतकर्मभोक्ता । तथैवैतच्छरीरकृतानां कर्मणाम्भाविनि शरीरे फलानि भोक्ता इत्यागमप्रामाण्याच्च परलोक्यात्मसिद्धिः ॥

तस्य भोगायतनं शरीरं हिताहितप्राप्तिपरिहारफलायाश्चे-

ष्टाया आश्रयः । इन्द्रियाणामनुग्रहहेतुरिन्द्रियार्थानामुपभोगनिमित्त शरीरमिति बन्धहेतुत्वान्मुमुक्षूणां हेयम् ॥

घ्राणरसनत्वक्चक्षुःश्रोत्राणीति पञ्चेन्द्रियाणि । गन्धाद्युपलब्धिक्रियायाः छिदिक्रियावत् करणसाध्यत्वात् करणानुमानम् । अनितरेतरसाध्यत्वात् पञ्च करणान्यनुमीयन्ते । तानि च पृथिव्यादिभ्यः पञ्चभ्यो भूतेभ्यः सम्भवन्ति । एकाहङ्कारप्रकृतित्वे त्वेकं वा सर्वार्थं सर्वाणि वा सर्वार्थानि स्युः । विषयनियमात्तु प्रकृतिनियमोऽप्येषामनुमीयते । तत्पञ्चत्वात्पञ्चत्वम् । कर्मेन्द्रियाणि तु पाण्यादीनि नाभ्युपगम्यन्ते तत्कार्यस्यान्यतो यावत्तावदुपलम्भात् । तानीमानीन्द्रियाणि भोगसाधनत्वाद् बन्धनहेतव इति मुमुक्षुणा हेयानि ॥

गन्धरसरूपशब्दस्पर्शाः पृथिव्यादिगुणा इन्द्रियार्थाः । गन्धरसरूपस्पर्शाः पृथिवीगुणाः, रसरूपस्पर्शास्त्रयोऽपां गुणाः, रूपस्पर्शौ द्वौ तेजसः, एकः स्पर्शो गुणो वायोः, शब्दो गुण आकाशस्य । न सर्वेषां सर्वगुणत्वं नाप्येकगुणत्वं, तथाऽनुपलम्भात् । त इमे भोग्या इन्द्रियार्था बन्धहेतव इति मुमुक्षुणा हेयाः । यद्यपि तदाश्रयस्यावयविनो द्रव्यस्य गुणान्तराणां परिमाणादीनां कर्मणश्च रागकारणता विद्यत एव तथाऽपि गन्धादयः प्राधान्येनासक्तिहेतव इति हेयतयैव निर्दिष्टाः ।

बुद्धिरुपलब्धिर्दर्शनमिति पर्यायाः । न पुनरचेतनाया बुद्धेर्ज्ञानं वृत्तिः, पुरुषस्य चेतनस्योपलब्धिदर्शनमिति पुरुष एवो-

पलभते पश्यति बुध्यते जानीते इति। सा क्षणिका। यस्य गुणो बुद्धिः स आत्मेति। सा च भोगस्वभावत्वात् संसारकारणमिति मुमुक्षुणा हेया॥

इन्द्रियार्थसन्निकर्षे सत्यपि युगपज्ज्ञानानुत्पादादान्तरसुखादिविषयोपलब्धेश्च बाह्यगन्धादिविषयोपलब्धिवत् करणसाध्यत्वादान्तरं करणम्मनोऽनुमीयते। तच्चाणु वेगवदाशुसञ्चारि नित्यम्। अन्यथा तत्कार्यनियमासिद्धिः। तदपि भोगसाधनत्वाद् बन्धकारणमिति मुमुक्षुणा हेयम्।

वाङ्मनःकायव्यापारः शुभाशुभफला प्रवृत्तिरित्युच्यते। सा च धर्माधर्माख्यसंस्कारोत्पादनद्वारेण स्वर्गनरकहेतुरिति मुमुक्षुणा यत्नतो हेया। कर्मत्यागाद्धि मोक्षमाचक्षते। पुरुषस्य कर्मसु प्रवर्तयितारो रागद्वेषमोहाः तत्कृतश्चैष संसार इति मुमुक्षुणा प्रतिपक्षभावनया क्षपणीयाः।

देहेन्द्रियादिसंघातस्य प्राक्तनस्य त्यागेन सङ्घातान्तरग्रहणं प्रेत्यभावः। एष एव च संसार इति मुमुक्षुणा हेयः।

प्रवृत्तिदोषजनकं सुखदुःखात्मकं मुख्यम्फलम्। तत्साधनं तु गौणम्। तच्च हेयमेवेति मुमुक्षुणा भावनीयम्। फलग्रहमाक्षिप्तमपि पीडनस्वभावं दुःखम्। अदुःखसम्मतस्यापि दुःखत्वभावनार्थमुपदिश्यते। अत एव फलत्वेऽपि सुखमिह न निर्दिष्टम्।

आत्यन्तिको दुःखवियोगोऽपवर्गः सर्वगुणवियुक्तस्यात्मनः स्वरूपावस्थानम्। सुखदुःखयोर्विवेकहानस्याशक्यता। दुःखं जिहासुः सुखमपि जह्यात्। तस्मात्परमपुरुषार्थोऽपवर्गः। स च

तत्त्वज्ञानादवाप्यते । मिथ्याज्ञानमूलो हि संसारः । तत्त्वज्ञानाच्च मिथ्याज्ञानापायः तस्य तद्विरोधित्वात् । मिथ्याज्ञानापाये तत्कार्यदोषा अपयान्ति दोषापाये तत्कार्यप्रवृत्तिरपैति प्रवृत्त्यपाये तत्कृतं जन्मापैति जन्मापाये तत्कृतं दुःखमपैति दुःखापायश्चापवर्ग इति ।

विशेषस्मृतिहेतोर्धर्मस्य ग्रहणाद् विशेषस्मृतेश्च जायमानः किं स्वित् इति विमर्शः संशयः । स च पञ्चविधः । (१)साधारणधर्मदर्शनात्–यथा ऊर्ध्वत्वदर्शनात् स्थाणुर्वा पुरुषो वेति । (२)असाधारणधर्मदर्शनात्–यथा विभागजत्वाच्छब्दो द्रव्यं गुणो वेति संशयो भवति । (३)विप्रतिपत्तेः–यथा नित्यत्वानित्यत्वे शब्दस्य संशयः । (४)उपलब्ध्यव्यवस्थातः—यथा किंचित् सदुपलभ्यते यथा नद्यादौ जलम् । अन्यदसदुपलभ्यते यथा मरुमरीचिषु जलम् । एवमन्यदुपलभ्यमाने संशयो भवति किं सदुपलभ्यते उतासदिति । (५)अनुपलब्ध्यव्यवस्थातः-यथा सदपि मृदन्तरितमुदकं नोपलभ्यते असच्च खपुष्पादि नोपलभ्यते ततोऽन्यतरेऽनुपलभ्यमाने संशयो भवति कि सन्नोपलभ्यते उतासदिति । स चायं संशयः प्रमाणप्रमेयान्तर्भूतो न्यायप्रवृत्त्यङ्गत्वात् पृथगुपादिश्यते ।

यमर्थमधिकृत्य पुरुषः प्रवर्तते तत् प्रयोजनम् । तद्द्विविधम्–मुख्यं गौणं च । सुखं दुःखम्मुख्यम्प्रयोजनम् । तत्साधनं तु गौणम् । प्रयोजनमूलत्वान्न्यायप्रवृत्तेः तदपि पृथगुपदिश्यते।

वादिप्रतिवादिनोः साध्यसाधनधर्माधिकरणत्वेन तद्रहितत्वेन वा प्रसिद्धोऽर्थो दृष्टान्तः । स च न्यायस्य प्रतिबन्धग्रहणस्थानमिति पृथगुपदिश्यते ।

अयमेवामिति प्रमाणमूलाभ्युपगमः विषयीकृतः सामान्य-विशेषवानर्थः सिद्धान्तः । स चतुर्विधः । सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः अधिकरणसिद्धान्तः अभ्युपगमसिद्धान्त इति । सर्वतन्त्राविरुद्धः स्वशास्त्रे प्रक्रियमाणोऽर्थः सर्वतन्त्रसिद्धान्तः । यथा प्रमाणश्चाक्षुषमिति। समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रति-तन्त्रसिद्धान्तः। यथा परमाणवः पदार्थ इति । समानतन्त्रे काणादे च सिद्धोऽयमर्थः परतन्त्रे साङ्ख्यादिशास्त्रेऽसिद्ध इति । यस्मिन्नर्थे सिध्यति तदनुयायिन्यर्थान्तराण्यपि सिध्यन्ति सो ऽधिकरणसिद्धान्तः । यथा इन्द्रियव्यतिरिक्त आत्मा दर्शन-स्पर्शनाभ्यामेकार्थग्रहणादिति अस्मिन्नर्थे सिध्यति गुणव्यति-रिक्तो गुणो नियतविषयाणीन्द्रियाणि इत्यादीन्यर्थान्तराण्य-पि सिध्यन्ति । अपरीक्षितोऽपि कश्चिदर्थो बुद्ध्यतिशयचिख्या-पयिषया प्रौढवादिभिस्तथेत्यभ्युपगम्यमानोऽभ्युपगमसिद्धान्तः । यथा अस्तु द्रव्यं शब्दः तथाऽप्यनित्य इति । स चायं चतु-र्विधोऽपि सिद्धान्तो न्यायस्याश्रय इति पृथगुपादिश्यते ।

साधनीयस्यार्थस्य यावता वाक्येन परस्मै प्रतिपादनं क्रियते तस्य पञ्च भागाः प्रतिज्ञादयोऽवयवाः । प्रतिज्ञा हेतुरु-दाहरणमुपनयो निगमनमिति । तत्र साध्यधर्मविशिष्टस्य ध-र्मिणो निर्देशः प्रतिज्ञा । यथा नित्यः शब्द इति । एष एव पक्ष उच्यते । पक्षे लक्षितेऽर्थात् पक्षाभासाः प्रत्यक्षविरुद्धा-दयः प्रतिक्षिप्ता भवन्ति। तद्यथा अनुष्णोऽग्निरिति प्रत्यक्ष-विरुद्धः पक्षः । अनुमानविरुद्धो—यथा न चक्षू रूपं गृह्णाति शब्दविरुद्धास्तु बहुप्रकाराः । ब्राह्मणेन सुरा पेयेत्यागम-विरुद्धः । न चन्द्रः शशीति लोकप्रसिद्धिविरुद्धः । नि-

त्यः शब्द इति बौद्धस्य स्वसिद्धान्तविरुद्धः । जननी मे वन्ध्या पिता मे बालब्रह्मचारीति धर्मिधर्मपदयोरेव विप्रतिषेधात् स्ववचनविरुद्धः । उपमानविरुद्धस्तु न गवयशब्दवाच्योऽयं गोसदृशः पिण्ड इति । अप्रसिद्धविशेषणः–शशशृङ्गविदीर्णेयम्भूमिरिति । अप्रसिद्धविशेष्यो यथा शशशृङ्गन्तीक्ष्णमिति । अप्रसिद्धोभयं यथा–शशशृङ्गधनुर्धरोऽयं बन्ध्यासुत इति । यत्रापि विशेषणविशेष्ययोः प्रमाणान्तर एव सिद्धिः तत्रापि साध्यत्वाभावेन प्रयोगावसराभावात् पक्षाभासतैव । तुहिन शीतलमग्निरुष्ण इति ।

ये चैते पक्षदोषा ये च वक्ष्यमाणदृष्टान्तदोषास्ते वस्तुस्थित्या हेतुदोषा एव । न हि पक्षदृष्टान्तमात्रप्रतिष्ठो वादो भवति । अत एव सूत्रकृता हेत्वाभासा एव शास्त्रे लक्षिताः न पक्षाभासा इति ॥

लिङ्गवचनं हेतुः । लिङ्गं व्याख्यातम् । तस्य विशिष्टविभक्त्यन्तं वचनं हेतुरित्युच्यते । यथा कृतकत्वादित्यादि । स च द्विविधः । उदाहरणसाधर्म्येण उदाहरणवैधर्म्येण च । अन्वयव्यतिरेकवान् प्रथमः । केवलव्यतिरेकी द्वितीयः । केवलान्वयी हेतुर्नास्त्येव । अपञ्चलक्षणस्य हेतुत्वाभावात् । केवलव्यतिरेकी तु क्वचिद् विषयेऽन्वयव्यतिरेकमूलः प्रवर्तते नात्यन्तमन्वयबाह्यः । यथा आत्मनि इच्छादिगतं कार्यत्वं सविशेषणम् । तत्र ह्यन्वयव्यतिरेकिणा कार्यमात्रेणाश्रयमात्रेणानुमीयते । इच्छादि क्वचिदाश्रितं कार्यत्वाद् घटवदिति । ततः स एव कार्यत्वं हेतुः सविशेषण आत्मसिद्धौ प्रयुज्यते । देहादिविलक्षणाश्रयाश्रितमिच्छादि देहादिषु बाधक-

प्रमाणोपपत्तौ सत्यां कार्यत्वात् । यत्र शरीरादिव्यतिरिक्ताश्रयाश्रितत्व नास्ति तत्र सविशेषण कार्यत्वमपि नास्ति यथा घटादौ शरीरत्वजातौ वेति ।

दृष्टान्तवचनमुदाहरणम् । दृष्टान्तो द्विविधः । साधर्म्येण वैधर्म्येण च । यत्र प्रयोज्यप्रयोजकभावेन साध्यसाधनयोर्धर्मयोरस्तित्वं ख्याप्यते स साधर्म्यदृष्टान्तः । तस्य व्याप्यव्यापकभावगर्भं वचनमुदाहरणम् । यद्यत् कृतकं तत्तदनित्यं दृष्टम्, यथा घट इति । यत्र साध्याभावप्रयुक्तो हेत्वभावः ख्याप्यते स वैधर्म्यदृष्टान्तः । तस्य तथाभूतमेव वचनमुदाहरणम् । यत्रानित्यत्वं नास्ति तत्र कृतकत्वमपि नास्ति, यथा आकाश इति । अर्थाच्च दृष्टान्ताभासाः प्रतिक्षिप्ता वेदितव्याः । साधर्म्यदृष्टान्ताभासे त्रयोऽर्थदोषाः–साध्यविकलः साधनविकलः उभयविकलश्चेति । द्वौ वचनदोषौ अनन्वयो विपरीतश्चेति । नित्यः शब्दः अमूर्तत्वात्–यदमूर्तन्तन्नित्यं दृष्टम्–यथा बुद्धिरिति साध्यविकलः । यथा परमाणुरिति साधनविकलः । यथा घट इत्युभयविकलः । इत्यर्थदोषाः । वचनदोषौ तु यदमूर्तन्तन्नित्यं यथा आकाशमिति वक्तव्ये आकाशे नित्यत्वामूर्तत्वे स्तः इत्यनन्वयः । यन्नित्यन्तदमूर्तमिति विपरीतान्वयः । वैधर्म्यदृष्टान्तेऽपि त्रयो दोषाः । साध्याव्यावृत्तः साधनाव्यावृत्तः उभयाव्यावृत्तश्चेति । द्वौ वचनदोषौ अव्यतिरेको विपरीतव्यतिरेकश्चेति । नित्यः शब्दोऽमूर्तत्वादित्यत्रैव हेतौ यत्र नित्यत्वन्नास्ति तत्र मूर्तत्वमपि नास्ति–यथापरमाणुष्विति साध्याव्यावृत्तः । यथा बुद्धाविति साधनाव्यावृत्तः । यथा आकाशे इत्युभयाव्यावृत्तः । इत्यर्थदोषाः । वचनदोषौ तु यत्र नित्यत्वन्नास्ति तत्रामूर्तत्वमपि नास्ति यथा घटे इति

वक्तव्ये घटे नित्यत्वामूर्तत्वे न स्तः इत्यव्यतिरेकः। साधना-भावे साध्याभावकथनं विपरीतव्यतिरेकः। कोऽयन्दोष इति चेत् कथन्न दोषः। हेतोः प्रयोजकत्वमेवोक्तं न स्यात्। ततश्च यत्र धूमो नास्ति तत्राग्निरपि नास्तीति कथ्यमाने तदनिर्वाहात् धूमस्य हेतुत्वन्न हीयते। तस्मात् साध्याभावहेत्वभावो वक्त-व्यः। यत्राग्निर्नास्ति तत्र धूमोऽपि नास्तीति ॥

साधर्म्यवैधर्म्योदाहरणानुसारेण तथेति न तथेति वा साध्यध-र्मिणि हेतोरुपसंहार उपनयः। यत्कृतकन्त तदनित्यं दृष्टम् यथा घट इति साधर्म्योदाहरणे तथा च कृतकः शब्द इति उपनयः। यदनि-त्यन्न भवति तत् कृतकमपि न भवति यथाकाशमिति वैधर्म्यो-दाहरणे न च तथाऽकृतकः शब्द इति उपनयः। उपनयमन्त-रेण दृष्टान्ते दर्शितशक्तिर्हेतुर्धर्मिणि न योजितः स्यात्। हेतुवचनेन हि तत्र धर्मवचन निर्दिष्टमिति। उपनयाभासस्तु वचनदोषा-देव। तथेपि स्थाने न तथेति-न तथेति स्थाने वा तथेति वचन-मुपनयाभासः।

द्विविधे हेतौ द्विविधे च दृष्टान्ते द्विविधे चोपनये तुल्यमेव हेत्वपदेशेन पुनः साधर्म्योपसंहरणान्निगमनम्।

त इमे प्रतिज्ञादयो निगमनान्ताः पञ्चावयवाः स्वप्रतिपत्ति-वत् परप्रतिपत्तिमुत्पादयितुमिच्छता यथानिर्दिष्टक्रमकाः प्रयो क्तव्याः।

एतदेव साधनवाक्य परार्थानुमानमाचक्षते। सोऽयम्परमो न्याय इति पृथगुच्यते। तत्र साधर्म्येण प्रयुज्यमानं तावदीदृश सा-धनवाक्यं भवति। अनित्यः शब्दः कृतकत्वात्-यत् कृतकं तदनित्यं दृष्टं यथा घटः-तथा च कृतकः शब्दः-तस्मात् कृतक-

त्वादनित्यमिति । वैधर्म्येण तु-अनित्यः शब्दः कृतकत्वात् यदनित्यं न भवति तत्कृतकमपि न भवति दृष्टं यथा आकाशम्-न च तथाऽकृतकः शब्दः-तस्मात् कृतकत्वादनित्यः शब्द इति । स्वप्रतिपत्तौ चैवमवगमात् क्रमोऽप्याक्रमणीयः ॥

अविज्ञाततत्त्वे धर्मिणि एकतरपक्षानुकूलार्थदर्शनेन तस्मिन् सम्भावनाप्रत्ययरूप ऊहस्तर्क उच्यते । यथा वाहकेलिप्रदेशे ऊर्ध्वत्वदर्शनात् पुरुषेणानेन भवितव्यमिति सम्भावनाप्रत्ययः । न चायं संशयः । अश्वकेलिप्रदेशे पुरुषवत् स्थाणोरसम्भाव्यत्वेन समकक्ष्यतया स्थाणुत्वपुरुषत्वयोरनुल्लेखात् । न च पुरुषनिर्णयोऽयं रात्रावपि स्थाणुनिरवननसम्भावनया तत्पक्षस्य सर्वात्मनानपनोदनात् । पुरुषनिश्चयहेतुना च शिरःपाण्यादिविशेषाणामप्रतिभासात् । स चायं तर्कः एकतरपक्षशैथिल्यजननेन द्वितीये पक्षे प्रवर्तमानं न्यायं विषयशोधनद्वारेणानुगृह्णातीति पृथगुच्यते ॥

पक्षप्रतिपक्षविषयसाधनोपालम्भपरीक्षया तदन्यतरपक्षावधारणं निर्णयः । तदवसानश्च न्याय इति न्यायोपरमहेतुत्वात् पृथगसावुपदिश्यते ।

वादो नाम वीतरागयोः पक्षप्रतिपक्षपरिग्रहपूर्वकः प्रमाणतर्कपूर्वकसाधनोपालम्भप्रयोगे क्रियमाणे एकपक्षनिर्णयावसानो वाक्यसमूहः । तत्र विविच्यमानो न्यायोऽनवगतावबोधमध्यवसिताभ्यनुज्ञां संशयग्रन्थिशिथिलतां चावहति इति वादः पृथगुपदिश्यते । स एव पक्षप्रतिपक्षपरिग्रहो विजिगीषया प्रयुक्तः छलजातिनिग्रहस्थानप्रयोगबहुलो जल्पः । स्वपक्षसाधनोपन्यासहीनो जल्प एव वितण्डा भवति । त एते जल्पवि-

तण्डे तत्त्वाध्यवसायसंरक्षणार्थमुपयुज्येते बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति । क्वचिदवसरे ताभ्यां नास्तिकस्य निराकरणात् । अनिराक्रियमाणे च तस्मिन् तत्त्वज्ञानास्थाशैथिल्यं शिष्याणां स्यादिति जल्पवितण्डयोरुपदेशः ।

अहेतवो हेतुवदवभासमानाः हेत्वाभासाः । हेतोः पञ्च लक्षणानि पक्षधर्मत्वादीनि उक्तानि । तेषामेकैकापाये पञ्च हेत्वाभासा भवन्ति । असिद्ध–विरुद्ध–अनैकान्तिक- कालात्ययापदिष्ट-प्रकरणसमाः ।

तत्र पक्षधर्मत्वं यस्य नास्ति सोऽसिद्धः । यथानित्यः शब्दः चाक्षुषत्वादिति । स चायमनेकप्रकारः । उभयासिद्धोऽयमुदाहृतः । अन्यतरासिद्धो यथा मीमांसकम्प्रति–अनित्यः शब्दः कृतकत्वादिति । स कञ्चित्कालं हेत्वाभासो भवति । वादिना तु साधिते हेतुतामश्नुते । असाधितस्तूभयासिद्धत्वमेव याति । सान्दिग्धासिद्धो–यथा अग्निमानयं प्रदेशो बाष्पादिभावसन्दिग्धधूमकत्वादिति । आश्रयासिद्धस्तु अविद्यमाने धर्मिणि हेतुः प्रयुज्यमानो भवति । शीलवान् वन्ध्यासुतः श्रुताध्ययनसम्पन्नत्वादिति । भागासिद्धो यथा–नित्याः परमाणवो गन्धवत्त्वादिति । सपक्षे सत्त्व यस्य नास्ति विपक्षे च वृत्तिरस्ति स साध्यविपर्ययसाधनत्वाद् विरुद्धो भवति । यथा-ऽश्वोऽयं विषाणित्वादिति । साध्यविपर्ययसाधनत्वमेव विरुद्धत्वं हेतोः । न तु विशेषविपर्ययसाधनत्वम् । एवमिष्यमाणे सर्वानुमानोच्छेदप्रसङ्गात् । धूमस्यापि महानसावगतविशेषविपर्ययसाधनत्वं पर्वतवर्तिनो विद्यते एव ।

विपक्षादपरिच्युतः पक्षसपक्षयोर्वर्तमानो हेतुः सव्यभिचारित्वादनैकान्तिको भवति। यथा नित्यःशब्दः प्रमेयत्वाद् व्योमवदिति । स

चायं साधारणोऽनैकान्तिकश्चतुर्विधः। सपक्षैकदेशवृत्तिः विपक्षव्यापी विपक्षैकदेशवृत्तिः सपक्षव्यापी–उभयपक्षदेशैकवृत्तिः उभयपक्षव्यापीति। प्रकारभेदव्युत्पादनमप्रयोजनम्, साधारणत्वानपायात्। असाधारणस्तु—नित्या भूर्गन्धवत्त्वादित्यनैकान्तिको न भवति विपक्षवृत्त्यभावात्। कस्तर्हि अयं हेत्वाभासः। अप्रयोजको जातिप्रयोगो वेति वक्ष्यते। अप्रयोजकत्वञ्च सर्वहेत्वाभासानामनुगतं रूपम्। अनित्याः परमाणवो मूर्तत्वात् इति सर्वलक्षणसम्पन्नोऽप्यप्रयोजक एव। विरुद्धाव्यभिचारी तु नाम हेत्वाभासो नास्त्येव। एकत्र धर्मिणि विरुद्धधर्मसाधनयोः द्वयोर्हेत्वोरनुपनिपातात् जातिप्रयोगमात्रन्तु तदुच्यते। अनित्यः शब्दः कृतकत्वाद् घटवत्–नित्यः शब्दः श्रावणत्वात् शब्दत्वत् इति संशयजनकत्वं नानैकान्तिकलक्षणं, चक्षुरादावपि तथाभावप्रसक्तेरिति।

प्रत्यक्षागमविरुद्धः कालात्ययापदिष्टः। अबाधितपरपक्षपरिग्रहो हेतुप्रयोगकालः तमतीत्यासावुपदिष्ट इति। अनुष्णोऽग्नि कृतकत्वात् घटवदिति प्रत्यक्षविरुद्धः। ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवत् इत्यागमविरुद्धः। अनुमानविरुद्धन्तु नानुमानम्भवति। तुल्यबलयोरनुमानयोः बाध्यबाधकभावाभावात्। अतुल्यबलत्वं तु एकस्य यत्कृतं तत एव तदाभासत्वे सिद्धे किमनुमानबाधयेति।

विशेषाग्रहणात् प्रकरणे पक्षे संशयो भवति—नित्यः शब्दोऽनित्यः शब्दो वेति। तदेव विशेषाग्रहणं भ्रान्त्या हेतुत्वेन प्रयोज्यमानं प्रकरणसमो हेत्वाभासो भवति। अनित्यः शब्दो नित्यधर्मानुपलब्धेः घटवदिति, नित्यः श-

ब्दोऽनित्यधर्मानुपलब्धेः आकाशवत् इति । न चानयोरन्यतरदपि साधनं बलीयः यदितरस्य बाधकमुच्येत । न चायमेव विरुद्धाव्यभिचारी भवति अनैकान्तिकलक्षणाभावादिति ।

त इमे हेत्वाभासा न्यायप्रविवेकं कुर्वन्तो वस्तुशुद्धिं विदधतीति पृथगुच्यन्ते । अत एव निग्रहस्थानान्तर्गतानामप्येषाम्पृथगुपदेशः ।

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डयोरङ्गभूतानि छलजातिनिग्रहस्थानानि पृथगुपदिष्टानि । तत्र परस्य वदतोऽर्थविकल्पोपपादनेन वचनविघातः छलम् । तत् त्रिविधम् । वाक्छलम् सामान्यच्छलम् उपचारच्छलश्चेति । साधारणे शब्दे प्रयुक्ते वक्तुरभिप्रेतादर्थान्तरकल्पनं वाक्छलम् । नवकम्बलकोऽयम्माणवक इति नूतनविवक्षया कथ्यते । परः सङ्ख्यामारोप्य निषेधति—कुतोऽस्य नव कम्बला इति ।

सम्भावनयाऽतिप्रसङ्गिनोऽपि सामान्यस्योपन्यासे हेतुत्वारोपेण तन्निषेधः सामान्यच्छलम् । अहो नु खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इति ब्राह्मणस्तुतिप्रसङ्गे कश्चिद् वदति—सम्भवति ब्राह्मणे विद्याचरणसम्पदिति । तं छलवादी ब्राह्मणत्वस्य हेतुतामारोप्य निराकुर्वन्नभियुङ्क्ते—यदि ब्राह्मणे विद्याचरणसम्पदस्ति व्रात्येऽपि सा भवेत् व्रात्योऽपि ब्राह्मण एवेति ।

औपचारिके प्रयोगे मुख्यप्रतिषेधेन प्रत्यवस्थानमुपचारच्छलम् । मञ्चाः क्रोशन्तीत्युक्ते परः प्रत्यवतिष्ठते—मञ्चाः कथमचेतनाः क्रोशन्ति मञ्चस्थाः पुरुषाः क्रोशन्तीति ।

तत्र छलत्रयेऽपि वृद्धव्यवहारप्रसिद्धशब्दसामर्थ्यपरीक्षणमेव प्रतिसमाधानं वेदितव्यम् ।

सम्यग् हेतौ हेत्वाभासे वा प्रयुक्ते झटिति तद्दोषतत्त्वाप्रतिभासे तु प्रतिबिम्बनप्रायं किमपि प्रत्यवस्थानं जातिरित्युच्यते। सा चतुर्विंशतिभेदा। साधर्म्यादिप्रत्यवस्थानभेदेन साधर्म्य-वैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः।

साधर्म्येण समवस्थानं साधर्म्यसमा जातिर्भवति। अनित्यः शब्दः कृतकत्वादिति प्रयोगे कृते साधर्म्यप्रयोगेणैव प्रत्यवस्थानम्-नित्यः शब्दो निरवयवत्वादाकाशवदिति। न तथाऽस्ति विशेषहेतुः घटसाधर्म्यात् कृतकत्वादनित्यः शब्दः न पुनराकाशसाधर्म्यान्नित्य इति।

वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिर्भवति। अनित्यः शब्दः कृतकत्वाद् घटवदित्यत्रैव प्रयोगे स एव प्रतिपत्तिहेतु-र्वैधर्म्येण प्रयुज्यते। नित्यः शब्दः कृतकत्वात्—अनित्यं हि सावयवं दृष्टं घटादि। न चास्ति विशेषहेतुर्घटसाधर्म्यात् कृतकत्वादनित्यः शब्दो न पुनस्तद्वैधर्म्यान्निरवयवत्वान्नित्य इति।

उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती भवतः। तथैव प्रयोगे दृष्टान्तधर्मं कञ्चित् साध्यधर्मिणि आपादयन् उत्कर्षसमां जातिं प्रयुङ्क्ते। यदि घटवत् कृतकत्वादनित्यः शब्दस्तदा घटवदेव मूर्तोऽपि भवतु, न चेन्मूर्तो घटवदनित्योऽपि मा भूदिति शब्दे धर्मान्तरोत्कर्षमापादयति। अपकर्षस्तु—घटः कृतकः सन् न श्रावणो दृष्टः। एवं शब्दोऽप्यस्तु। न चेद् घटवदनित्योऽपि मा भूदिति शब्दे श्रावणत्वमपकर्षती-

ति। वर्ण्यावर्ण्याभ्यां प्रत्यवस्थानं वर्ण्यावर्ण्यसमे जाती भवतः। ख्यापनीयो वर्ण्यः साध्यधर्मः। तद्विपर्ययादवर्ण्यः सिद्धो दृष्टान्तधर्मः। तावेतौ वर्ण्यावर्ण्यौ साध्यदृष्टान्तधर्मौ विपर्यस्यन् वर्ण्यावर्ण्यसमे जाती प्रयुङ्क्ते। यथाविधः शब्दधर्मः कृतकत्वादिर्न तादृग् घटधर्मः। यादृक् च घटधर्मो न तादृक् शब्दधर्म इति। यदि शब्दो नित्यत्वेन वर्ण्यते साध्यते, घटोऽपि वर्ण्यतामिति वर्ण्यसमा। घटश्चेन्न वर्ण्यते शब्दोऽपि मा वर्णीति अवर्ण्यसमा। धर्मान्तरविकल्पेन प्रत्यवस्थानं विकल्पसमा जातिः। यथा कृतकं किञ्चिन् मृदु दृष्टं उगूलराङ्कवशय्यादि ( ? ) किञ्चित् कठिनं कुठारादि। एवं कृतकं किञ्चिदनित्यं घटादि, किञ्चिन्नित्यं शब्दादि इति। साध्यसाम्यापादनेन प्रत्यवस्थान साध्यसमा जातिर्भवति। यदि यथा घटस्तथा शब्दः प्राप्तस्तर्हि यथा शब्दस्तथा घट इति। शब्दश्च साध्य इति घटोऽपि साध्यो भवति। ततश्च साध्यः साधनस्य दृष्टान्तः स्यात्। न चेदेवं तथाऽपि वैलक्षण्यात् सुतरामदृष्टान्त इति। प्राप्त्यप्राप्तिविकल्पाभ्यां प्रत्यवस्थानं प्राप्त्यप्राप्तिसमे जाती भवतः। यदेतत् कृतकत्व त्वया साधनमुपन्यस्तं तत् किं प्राप्य साध्यं साधयति अप्राप्य वा। प्राप्य चेद्, द्वयोर्विद्यमानयोरेव प्राप्तिर्भवति न सदसतोरिति द्वयोश्च सत्त्वात् कि कस्य साधनं साध्य वा। अप्राप्य तु साधनत्वमयुक्तमिति। प्रसङ्गापादनेन प्रत्यवस्थानं प्रसङ्गसमा जातिर्भवति। यद्यनित्यत्वे कृतकत्व साधन कृतकत्वस्येदानी कि साधनम्। तत्साधनेऽपि किं साधनमिति। प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमा जातिः। अनित्यः शब्दः प्रयत्नानान्तरीयकत्वाद् घटवदित्युक्ते जातिवाद्याह—यथा घटः प्रयत्ननान्तरीयकोऽनित्यो दृष्टः, एवं प्रतिदृष्टान्त आकाशो

नित्योऽपि प्रयत्ननान्तरीयको दृष्टान्तः। कूपखननप्रयत्नानन्त-
-रं तदुपलम्भादिति। न चेदमनैकान्तिकोद्भावन भङ्ग्यन्तरेण
प्रत्यवस्थानात्। अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमा जातिर्भ-
वति। यथाऽनुत्पन्ने शब्दाख्ये धर्मे कृतकत्वं धर्मः क वर्तते। न
चेदं हेत्वभावादसिद्धिः अनित्यत्वस्येति। साधर्म्यवैधर्म्यसमा
जातिर्या पूर्वमुदाहृता सैव संशयेनोपक्रियमाणा संशयसमा
जातिर्भवति। किं घटसाधर्म्यात् कृतकत्वादनित्यः शब्दः,
उत तद्वैधर्म्यादाकाशसाधर्म्याद्वा निरवयवत्वान्नित्य
इति। द्वितीयपक्षोत्थापनबुद्ध्या प्रयुज्यमाना सैव साधर्म्यसमा
वैधर्म्यसमा जातिः प्रकरणसमा भवति। तत्रैव अनित्यः शब्दः
कृतकत्वाद् घटवदिति प्रयोगे नित्यः शब्दः श्रावणत्वात् शब्द-
त्ववदिति उद्भावनप्रकारभेदमात्रेण च जातिनानात्वं द्रष्टव्यम्।
त्रैकाल्यानुपपत्त्या प्रत्यवस्था नाम अहेतुसमा जातिर्भवति। हेतुः
साधनम्, तत्साध्यात् पूर्वं पश्चात् सह वा भवेत्। यदि पूर्वम्,
असिद्धे साध्ये तत् कस्य साधनम्। यदि पश्चात् साधनं तर्हि
साध्ये तस्मिन् पूर्वसिद्धे किं साधनेन। अथ युगपत् साध्य-
साधने तर्हि तयोः सव्येतरविषाणयोरिव साध्यसाधनभाव एव न
भवेदिति। अर्थापत्त्या प्रत्यवस्था नाम अर्थापत्तिसमा जातिर्भवति।
यद्यनित्यसाधर्म्यात् कृतकत्वादनित्यः शब्दः अर्थादापद्यते नि-
त्यसाधर्म्यान्नित्य इति। अस्य चास्ति नित्येन साधर्म्यमाकाशा-
दिना निरवयवत्वमिति उद्भावनप्रकारभेद एवायम्। अविशेषा-
दनेन प्रत्यवस्थानमविशेषसमा जातिर्भवति। यदि शब्दघटयोरेको
धर्मः कृतकत्वमिष्यते तर्हि समानधर्मयोगात् तयोरविशेषे तद्वदेव
सर्वपदार्थानामविशेषः प्रसज्यत इति। उपपत्त्या प्रत्यवस्थानमुप-
पत्तिसमा जातिर्भवति। यदि कृतकत्वोपपत्त्या शब्दस्यानित्यत्व

तदा निरवयवत्वोपपत्त्या नित्यत्वमपि कस्मान्न भवतीति पक्षद्वयोपपत्त्याऽनध्यवसायपर्यवसाधनत्व विवक्षितमित्युद्भावनप्रकारभेद एवायम् । उपलब्ध्या प्रत्यवस्थानमुपलब्धिसमा जातिर्भवति । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति प्रयुक्ते परः प्रत्यवतिष्ठते ? न खलु प्रयत्नानन्तरीयकत्वमनित्यसाधनम् । साधनं हि तदुच्यते येन विना न साध्यमुपलभ्यते । उपलभ्यते च प्रयत्नानन्तरीयकत्वेन विनाऽपि विद्युदादावनित्यत्वम् । शब्देऽपि क्वचिद्वायुवेगविभज्यमानवनस्पत्यादिजन्येऽपि च ॥

अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिर्भवति । तत्रैव प्रयत्नानन्तरीयकत्वे हेतावुपन्यस्ते परः प्रत्यवतिष्ठते । न प्रयत्नकार्यः शब्दः प्रागुच्चारणादस्त्येव आवरणयोगात्तु नोपलभ्यते । आवरणानुपलम्भेऽप्यनुपलम्भान्नास्त्येव शब्द इति चेन्न, आवरणानुपलब्धेरनुपलम्भात् । आवरणानुपलब्धेश्च अनुपलम्भादभावः । तदभावे चावरणोपलब्धेर्भावो भवति । ततश्च मृदन्तरितमूलकीलोदकादिवदावरणोपलब्धिकृतमेव शाब्दस्य प्रागुच्चारणादग्रहणमिति । प्रयत्नकार्यत्वाभावान्नित्यः शब्द इति । साध्यधर्मनित्यत्वविकल्पेन शब्दनित्यत्वापादन नित्यसमा जातिर्भवति । अनित्यः शब्द इति प्रतिज्ञाते जातिवादी विकल्पयति—येयमनित्यता शब्दस्य उच्यते सा किं नित्याऽनित्या वेति । यद्यनित्या तदियमवश्यमपायिनी । अनित्यताया अपायान्नित्यः शब्द इति । अथ नित्यता नित्यैव तथाऽपि धर्मस्य नित्यत्वात् तस्य च निराश्रयस्यानुपपत्तेः तदाश्रयभूतः शब्दोऽपि नित्यो भवेत् । तदनित्यत्वे तन्नित्यत्वायोगा-

दित्युभयथा नित्यः शब्द इति ।

सर्वभावानित्यत्वोपपादनेन प्रत्यवस्थानमनित्यसमा जातिर्भवति । घटेन साधर्म्यमनित्येन शब्दस्यास्तीति तस्यानित्यत्वं यदि प्रतिपाद्यते तद्घटेन सर्वपदार्थानामस्त्येव किमपि साधर्म्य मिति तेषामनित्यत्वं स्यात् । अथ पदार्थान्तराणां तथैव भावेऽपि नानित्यत्वं तर्हि शब्दस्यापि मा भूदिति नित्यत्वमात्रापादनपूर्वकाद् विशेषोद्भावनाच्च विशेषसमातो भिन्नेयं जातिः । प्रयत्नकार्यनानात्वोपन्यासेन प्रत्यवस्थानं कार्यसमा जातिर्भवति । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिवाद्याह–प्रयत्नकार्यस्य द्वैरूप्यं दृष्टम् । किञ्चिदसदेव प्रयत्नेन निर्वर्त्यते, यथा घटादि । किञ्चित् सदेवावरणव्यपनयनादिना प्रयत्नेनाऽभिव्यज्यते, यथा मृदन्तरितमुदकादि । एवं प्रयत्नकार्यनानात्वादेष प्रयत्नेन व्यज्यते शब्दः क्रियते वेति संशयापादनप्रकारभेदाच्च संशयसमातः कार्यसमा जातिर्भिद्यते । तदेवमुद्भावनविषयविकल्पभेदेन जातीनामानन्त्येऽपि असङ्कीर्णोदाहरणविवक्षया चतुर्विंशतिर्जातिभेदाः प्रदर्शिताः । प्रतिसमाधानन्तु सर्वजातीनां पक्षधर्मत्वाद्यनुमानलक्षणे हेतावेवम्प्रायाः पांशुपाता भवन्ति । कृतकत्वप्रयत्ननान्तरीयकत्वयोश्च दृढप्रतिबन्धत्वादावरणादिकृतं शब्दानुपलम्भनम् । अपि त्वनित्यत्वमेव । जातिप्रयोगे च परेण कृते सम्यगुत्तर वक्तव्यम् । प्रतीपज्ञात्युत्तरेणैव प्रत्यवस्थेयमासमञ्जस्यप्रसङ्गादिति ॥

विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् । निग्रहः पराजयः तस्य स्थानम् आश्रयः कारणमित्यर्थः । किञ्च पराजयकारणम् । विप्रतिपत्तिरप्रतिपत्तिश्च । विपरीता कुत्सिता गर्हणीया

प्रतिपत्तिः। साधनाभासे साधनबुद्धिः, दूषणाभासे दूषणबुद्धिः। अप्रतिप्रत्तिस्तु आरम्भविषयेऽनारम्भः। आरम्भस्य विषयः साधनस्य ज्ञापनं दूषणस्योद्धरणं तयोरकरणमप्रतिपत्तिः। द्विधा हि वादी पराजीयते यथा वक्तव्यमप्रतिपद्यमानो विपरीतं वा प्रतिपद्यमान इति। विप्रतिपत्त्यप्रतिपत्तिभेदाद् द्वाविंशतिर्निग्रहस्थानानि। १ प्रतिज्ञाहानिः २ प्रतिज्ञान्तरम् ३ प्रतिज्ञाविरोधः ४ प्रतिज्ञासंन्यासः ५ हेत्वन्तरम् ६ अर्थान्तरम् ७ निरर्थकम् ८ अविज्ञातार्थम् ९ अपार्थकम् १० अप्राप्तकालम् ११ न्यूनम् १२ अधिकम् १३ पुनरुक्तम् १४ अननुभाषणम् १५ अज्ञानम् १६ अप्रतिभा १७ विक्षेपः १८ मतानुज्ञा १९ पर्यनुयोज्योपेक्षणम् २० निरनुयोज्यानुयोगः २१ अपसिद्धान्तः २२ हेत्वाभासाश्चेति निग्रहस्थानानि। तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपो पर्यनुयोज्योपेक्षणमिति अप्रतिप्रत्तिविकाराः, शेषास्तु विप्रतिपत्तिभेदाः॥

(१) तत्र प्रतिज्ञाहानिस्तावद् हेतावनैकान्तिकीकृते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्युपगच्छतः प्रतिज्ञाहानिर्नाम निग्रहस्थानम्। अनित्यः शब्द ऐन्द्रियकत्वाद् घटवदिति प्रतिज्ञासिद्धये वादी वदन् परेण सामान्यमैन्द्रियकमपि नित्यं दृष्टमिति हेतौ अनैकान्तिकीकृते यद्येवम्ब्रूयात् सामान्यवद् घटोऽपि नित्योऽपि भवत्विति। स एवं ब्रुवाणः शब्दानित्यत्वप्रतिज्ञां जह्यात्। शब्दोऽपि नित्य एव स्यादिति प्रतिज्ञाहान्या पराजीयते ॥ १ ॥

(२) प्रतिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तर साधनीयमभिदधतः प्रतिज्ञान्तरं नाम निग्रहस्थानम्।

अनित्यः शब्द ऐन्द्रियकत्वादिति उक्ते तथैव सामान्येन व्यभिचारे चोदिते यदि ब्रूयाद् युक्तं यत् सामान्यमैन्द्रियकं नित्यं तद्धि सर्वगतमसर्वगतस्तु शब्द इति सोऽयमनित्यशब्द इति पूर्वप्रतिज्ञातः प्रतिज्ञान्तरम् असर्वगतः शब्द इति वदन् प्रतिज्ञान्तरेण निगृहीतो भवति ॥ २ ॥

(३) प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधो नाम निग्रहस्थानं भवति। गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरिति सोऽयम्प्रतिज्ञाहेत्वोर्विरोधः। यदि गुणव्यतिरिक्तं द्रव्यं कथं रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः। अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः कथं गुणव्यतिरिक्तं द्रव्यमिति। तदयं विरुद्धाभिधानात् पराजीयते ॥ ३ ॥

(४) पक्षसाधने परेण दूषिते तदुद्धरणाशक्त्या प्रतिज्ञामेव निह्नुवानस्य प्रतिज्ञासंन्यासो नाम निग्रहस्थानम्भवति। अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येनानैकान्तिकतायामुद्भावितायां यदि ब्रूयात्—क एवमाह अनित्यः शब्द इति प्रतिज्ञासंन्यासात् पराजितो भवति ॥ ४ ॥

(५) अविशेषाभिहिते हेतौ प्रतिषिद्धे तद्विशेषणमभिदधतो हेत्वन्तरन्नाम निग्रहस्थानम्भवति। तस्मिन्नेव प्रयोगे तथैव सामान्यव्यभिचारेण दूषिते जातिमत्त्वे सतीत्यादिविशेषणमुपाददानो हेत्वन्तरेण निगृहीतो भवति ॥ ५ ॥

(६) प्रकृतादर्थान्तरं तदनौपयिकमभिदधतोऽर्थान्तरन्नाम निग्रहस्थानम्भवति। अनित्यः शब्दः कृतकत्वादिति हेतुः। हेतुरिति हिनोतेर्धातोस्तुन्प्रत्यये। कृदन्तम्पद नाम सुप्तिङन्तमित्यादि प्रकृतानुपयोगि वदन् अर्थान्तरेण निगृह्यते ॥ ६ ॥

(७) अभिधेयरहितवर्णानुपूर्व्वीप्रयोगमात्रं निरर्थकन्नाम निग्रहस्थानम्भवति । अनित्यः शब्दः कचटतपानां जबगडत्वाद् झभघढवदिति ॥ ७ ॥

(८) यत् साधनवाक्यं दूषणवाक्यं वा त्रिरभिहितमपि पर्षत्प्रतिवादिभ्यां बोद्धुन्न शक्यते क्लिष्टशब्दमप्रसिद्धप्रयोगमतिद्रुतोच्चारितमित्येवं तदविज्ञातार्थन्नाम निग्रहस्थानं भवति । असामर्थ्यसम्वरणप्रकारोऽयमिति ॥ ८ ॥

(९) पूर्वपरासङ्गतपदसमूहप्रयोगादप्रतिष्ठितवाक्यार्थमपार्थकन्नाम निग्रहस्थानम् । दश दाडिमानि षडपूपा इत्यादि ॥९॥

(१०) प्रतिज्ञाहेतूदाहरणोपनयनिगमनवचनक्रममुल्लङ्घ्यावयवविपर्यासेन प्रयुज्यमानमनुमानवाक्यमप्राप्तकालन्नाम निग्रहस्थानम्भवति । स्वप्रतिपत्तिवत् परप्रतिपत्तिजनने परार्थानुमाने क्रमस्याङ्गत्वात् ॥ १० ॥

(११) पञ्चावयवे वाक्ये प्रयोक्तव्ये तदन्यतमेनाप्यवयवेन हीनम्प्रयुञ्जानस्य न्यूनन्नाम निग्रहस्थानम्भवति । सर्वावयवाना परप्रतिपत्तिजन्मन्युपयोगात् ॥ ११ ॥

(१२) एकेनैव हेतुना दृष्टान्तेन वा प्रतिपादितेऽर्थे हेत्वन्तरं दृष्टान्तान्तरं वा वदतोऽधिकन्नाम निग्रहस्थानम्भवति । निष्प्रयोजनस्याभिधानात् ॥ १२ ॥

(१३) शब्दार्थयोः पुनर्वचनं पुनरुक्तं नाम निग्रहस्थानं भवति । अनुवाद वर्जयित्वा । शब्दपुनरुक्त नाम स एव शब्दः पुनरुच्चार्यते । यथा शब्दो नित्यो नित्य इति । अर्थपुनरुक्तं यत्र सोऽर्थः पूर्वमन्येनोक्तः पुनः पर्यायान्तरेणोच्यते । यथा

अनित्यः शब्दो विनाशी ध्वनिरिति । यद्यपि शब्दपौनरुक्त्ये-ऽपि अर्थपौनरुक्त्यमस्त्येव तथापि शब्दपूर्वकत्वादर्थप्रत्ययभिन्नायाः प्रथमतरं शब्दप्रत्यभिज्ञानात् शब्दपौनरुक्त्यमेव तदुच्यते । "न स्वर्थपौनरुक्त्यमेवैकं पुनरुक्तम् । शब्दपौनरुक्त्येऽपि अर्थभेदाददोषो यथा मत्ते भवति भवति नः सर्वमभिमतमिति" । नैवम्, नामाख्यातभेदन स्वरादिभेदेन तत्र शब्दभेदावधारणात् । अनुवादे तु पौनरुक्त्यमदोषो यथा हेत्वपदेशेन प्रतिज्ञाया पुनर्वचनं निगमनमिति । अर्थादापन्नस्य शब्देन यत्पुनर्वचनं पुनरुक्तमेव तत् । यथाऽसत्सु मेघेषु वृष्टिर्न भवतीति अर्थादापद्यते सत्सु भवतीत्येतत् स्वकण्ठेन कथ्यमानं पुनरुक्तम्भवति । अर्थप्रतीत्यै हि शब्दप्रयोगः । प्रतीतेऽर्थे किं शब्देनेति ॥ १३ ॥

(१४) पर्षदो विदितस्य वादिना त्रिरुच्चारितस्यापि यदप्रत्युच्चारणं तदननुभाषणन्नाम निग्रहस्थानम् । अप्रत्युच्चारयन् किमाश्रयं दूषणमभिदधीत ॥ १४ ॥

(१५) परिषदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादिना यदविज्ञानं तदज्ञानं नाम निग्रहस्थानम्भवति । अविदितविषयो हि क उत्तरं ब्रूयात् । न चाननुभाषणमेवेदम् । ज्ञातेऽपि वस्तुनि अनुभाषणसामर्थ्यादर्शनात् ॥ १५ ॥

(१६) परपक्षे गृहीतेऽपि अनुभाषितेपि तस्मिन् उत्तराप्रतिपत्तिरप्रातिभा नाम निग्रहस्थानम्भवति ॥ १६ ॥

(१७) कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपो नाम निग्रहस्थानम्भवति । यथा कथं प्रस्तुत्य कार्यव्यासङ्गमपदिशति–इदं

मे करणीयमपहीयते, माता मे मृता, नसेन मे कण्ठ उपरुद्धः, इत्यभिधाय कथां विच्छिन्दन् विक्षेपेण पराजीयते ॥ १७ ॥

(१८) स्वपक्षे परापादितं दूषणमनुद्धृत्य तदेव परपक्षे प्रतीपमापादयतः परमतानुज्ञानन्नाम निग्रहस्थानम्भवति । चौरो भवान् पुरुषत्वात् प्रसिद्धचौरवद् इत्युक्ते भवानपि चौरः पुरुषत्वादिति वदन् आत्मनः प्रतिपादितं चौरत्वदोषमभ्युपगतवानिति मतानुज्ञया निगृह्यते ॥ १८ ॥

(१९) निग्रहम्प्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानम्भवति । पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः, इदन्ते निग्रहस्थानमनुपतितमतो निगृहीतोऽसीति वचनीयः । तं य उपेक्षते न निगृह्णाति स पर्यनुयोज्योपेक्षणेन निगृह्यते । एतच्च निग्रहस्थानं पर्षदाऽनेन युक्तयोगनावनीयम्—न स्वसावात्मनो दोषं विवृणुयाद् अहं निग्राह्यस्त्वयोपेक्षित इति ॥ १९ ॥

(२०) अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगो नाम निग्रहस्थानम्भवति । उपपन्नवादिनमनिग्रहार्हमपि निगृहीतोऽसीति ब्रूयात् स एवाकृतदोषोद्भावनान्निगृह्यते ॥ २० ॥

(२१) सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तो नाम निग्रहस्थानम्भवति । यः प्रथममभ्युपगम्य कथामुपक्रमते तत्र सिसाधयिषितार्थसाधनाय परोपलम्भाय वा सिद्धान्तविरुद्धमभिधत्ते सोऽपसिद्धान्तेन निगृह्यते । यथा सांख्यः नासत उत्पत्तिर्न सतः प्रध्वंस इति सिद्धान्तम्प्रतिज्ञाय प्रधानसिद्धये साधनं प्रयुङ्क्ते—व्यक्तं विकारजातमेकप्रकृतिकं

एकप्रकृतिसमन्वितत्वाद् घटशरावादिवत् । घटादयो हि मृद्विकारा मृत्समन्विता इत्येकप्रकृतिका इत्येव विश्वं गवाश्वादिविकारजातं सुखदुःखमोहात्मकं दृश्यते इति तदात्मकैकप्रकृतिप्रभवं भवितुमर्हतीति तदेवं वदन्तं नैयायिकोऽनुयुङ्क्ते—का प्रकृतिः, का विकृतिः, अविदितप्रकृतिविकृतिस्वरूपो हि कथं विकृतीनामेकप्रकृतित्वं जानीयादित्येव पृष्टः सांख्य आह—तस्यावास्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरम्प्रवर्तते सा प्रकृतिः । यत्र तद्धर्मान्तरं प्रवर्तते सा विकृतिरिति । सोयं वदन् प्रागभ्युपगतं सदसन्निरोधोत्पादाभावसिद्धान्तं निरुणद्धि । याद्धि प्राग्धर्मनिरोधे धर्मान्तरप्रादुर्भावः कथं सदसतो निरोधोत्पादौ न स्त इत्येवमपसिद्धान्ताभिधानात् कापिलः पराजीयते ॥ २१ ॥

(२२) हेत्वाभासास्तु असिद्धादयः पूर्वमेव व्याख्याताः । ते यथालक्षिता एव निग्रहस्थानावस्था प्रतिपद्यन्ते ॥ २२ ॥

तदेवं छलजातिनिग्रहस्थानस्वरूपाभिज्ञः स्ववाक्ये तानि वर्जयन् परप्रयुक्तानि च समादधन् यथाभिमतसाध्यसिद्धिं लभते ।

इत्येतद + + + + +

षोडशपदार्थतत्त्व बालव्युत्पत्तये कथितम् ।
अजातरसनिष्यन्दमनभिव्यक्तसौरभम् ।

न्यायस्य कलिकामात्रं जयन्तः पर्यदीदृशत् ॥

समाप्तेयं न्यायकलिका ॥

शुभमस्तु ।

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS

Edited by
GOPINATH KAVIRAJ, M A

No 1– The Kiranavali Bhaskara, a Commentary on Udayana's Kiranāvali, Dravya section, by Padmanabha Misra
Edited with Introduction and Index by Gopinath Kavirāj, M A

No 2 –The Advaita Chintamani by Rangoji Bhatta Ed with Introduction etc by Narayana Sastri Khiste Sahityacharya

No 3– The Vedanta Kalpalatika, by Madhusūdana Sarasvati
Ed with Introduction etc by Ramajna Pandeya Vyākaranacharya

No 4– The Kusumanjali Bodhani a Commentary on Udayana's Theistic Tract, Nyaya Kusumāñjali, by Varadaraja
Ed with Introduction etc by Gopinath Kaviraj, M A

No 5 The Rasasara, a Commentary on Udayana's Kiranāvali, Guna Section by Bhatta Vadindra
Ed with Introduction etc by Gopinath Kaviraj, M A

No 6 (Part I) The Bhavana Viveka by Mandana Misra, with a Commentary by Bhatta Umbeka
Ed with Introduction etc by Mm Ganganātha Jha, M A D Litt

No 6 (Part II)– Ditto Ditto

No 7 (Part I) Yoginihrdaya dipika, by Amrtananda Natha, being a Commentary on Yoginihrdaya a part of Vamakesvara Tantra
Ed with Introduction etc by Gopinath Kaviraj, M A

No 7– ( Part II ) Ditto Ditto

No 8— The Kavyadākini, by Gangananda Kavindra
Ed with Introduction etc by Jagannatha Sastri Hoshing Sahityopādhyāya

No 9 (Part I)- The Bhakti Chandrikā a Commentary on Sandilya's Bhaktisutras, by Narayana Tirtha
Ed with a Prefatory Note by Gopinath Kaviraj, M A

No 10 (Part I)–The Siddhāntaratna, by Baladeva Vidyābhūsana
Ed with a Prefatory Note by Gopinath Kaviraj, M A

No 11–The S'ri Vidyā Ratna Sūtras, by Gaudapāda, with a Commentary by S'ankararanya
Ed with Introduction etc by Narāyana S'āstrî Khiste Sahityāchārya

No 12–The Rasapradipa by Prabhakara Bhatta
Ed with Introduction etc by Narayaṅa S'astri Khiste Sāhityāchārya

No 13–The Siddhasiddhānta Sangraha by Balabhadra
Ed with Introduction by Gopinath Kaviraj, M A

No 14–The Trivenika, by Āsādhara Bhatta
Ed with Introduction by Batukanatha S'arma Sahityopadhyaya, M A and Jaganātha S'āstri Hoshing Sāhityopādhyāya

No 15 (Part I) The Tripurārahasya
Ed with a Prefatory Note by Gopinath Kaviraj M A

No 16–The Kāvya Vilasa, by Chiranjiva Bhattacharya
Ed with Introduction etc by Batukanātha S'arma Sahityopādhyāya, M A and Jagannātha S'āstri Hoshing Sahityopādhyaya

No 17–The Nyāya Kalika, by Bhatta Jayanta
Ed with Introduction by Mm Gangānātha Jhā, M A, D Litt

No 18 (Part I)–The Goraksa siddhānta Sangraha
Ed with a Prefatory Note by Gopinath Kaviraj, M A

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

**Edited by**

**Gopinath Kaviraj, M A**



To be had of—

The Superintendent, Government Press,
Allahabad, U P (India)